धर्मावच्छिन्ने इतरान्वयबोधजनकसामग्र्या उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकं वक्तव्यमिति द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न संभवतीति न तादृशबोधतात्पर्येण तादृशप्रयोगापत्तिरिति वाच्यम्, योग्यताभ्रमेण 'आकाशावत्र स्तः' इत्यादिवाक्याद् द्वित्वादिनैकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधात् तादृशव्युत्पत्तेस्तन्निर्वाहककार्यकारणभावस्य च कल्पनाऽसंभवात् ।

---

त्वादेरन्वयस्तद्विषयको यो बोधस्तज्जनकसामग्र्या योग्यताज्ञानादिरूपया व्यासज्यवृत्तिद्वित्वादिधर्मावच्छिन्नघटद्वयादावेव पदार्थान्तरान्वयविषयको बोधो जायते इति स्वीकर्तव्यं तथा च व्यासज्यवृत्तिद्वित्वादिधर्मावच्छिन्ने इतरान्वयबोधजनकसामग्र्या द्वित्वादिनैकघटविषयक एतद्देशवृत्तित्वाश्रयत्वान्वयबोधो न संभवति, अर्थात् एकघटव्यक्तौ उभयवृत्तिद्वित्वस्य सत्त्वेऽप्येतद्देशवृत्तित्वाश्रयत्वस्यान्वयो न संभवति— एकघटव्यक्तौ द्वित्वस्य पर्याप्त्यभावाद् द्वित्वपर्याप्तिस्तु घटद्वये एवास्तीति घटद्वये एवैतद्देशवृत्तित्वाश्रयत्वस्यान्वयः 'अत्र घटौ स्तः' इत्यत्र संभवतीति न तादृशतात्पर्येण=एतद्देशवर्तमानैकमात्रघटे एतद्देशवृत्तित्वाश्रयत्वबोधनतात्पर्येण एतद्देशे एकमात्रघटसत्त्वदशायामितियावत् तथाप्रयोगापत्तिः='अत्र घटौ स्तः' इतिप्रयोगापत्तिरित्याशङ्क्याह— न चेति ।

अत्र च "द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न संभवतीति— उभयत्वावच्छिन्नघटद्वयविशेष्यकैतद्देशवृत्तित्वप्रकारकान्वयबुद्धित्वरूपमुक्तसामग्रीकार्यतावच्छेदकमुभयत्वावच्छिन्नोभयविशेष्यकैतद्देशवृत्तित्वप्रकारिकायाम् 'अत्र घटौ स्तः' इत्याकारकबुद्धावेवास्ति न तु 'अत्र घटौ स्तः' इत्याकारकद्वित्वविशिष्टैकघटमात्रविषयकैतद्देशवृत्तित्वप्रकारकान्वयबोधेऽस्त्यत उक्तसामग्रीबलात् कार्यतावच्छेदकानाक्रान्तद्वित्वविशिष्टैकघटमात्रविषयकैतद्देशवृत्तित्वप्रकारको बोध आपादयितुं न शक्यते इति तादृशबोधतात्पर्येण=द्वित्वविशिष्टैकघटमात्रविशेष्यकैतद्देशवृत्तित्वप्रकारकबोधः 'अत्र घटौ स्तः' इति वाक्याज्जायतामिति तात्पर्येण न तादृशप्रयोगापत्तिः='अत्र घटौ स्तः' इतिप्रयोगापत्तिः" इति कृष्णंभट्टाः । परिहरति— योग्यताभ्रमेणेति, 'आकाशौ द्वौ' इत्याकारकभ्रमे जाते यदा योग्यताभ्रमेण 'अत्राकाशौ स्तः' इतिवाक्यमुच्चार्यते तदाऽन्वयितावच्छेदकव्यासज्यवृत्तिद्वित्वस्याऽऽकाशपदोत्तरद्विवचनार्थस्य पर्याप्तिस्तु व्यक्तिद्वये एव संभवति नाकाशैकव्यक्तौ. आकाशस्य चैकैव व्यक्तिरिति तत्राकाशैकव्यक्तावप्येतद्देशवृत्तित्वाश्रयत्वरूपपदार्थान्तरस्यान्वयो भवतीत्युक्तव्युत्पत्तौ व्यभिचारः प्राप्त इति तादृशव्युत्पत्तेः="व्यासज्यवृत्तिधर्मो यत्रान्वयितावच्छेदकस्तत्र यावत्स्वन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वयः" इतिव्युत्पत्तेः कल्पना न संभवति, तथोक्तव्युत्पत्तिनिर्वाहककार्यकारणभावस्य=व्यासज्यवृत्तिधर्मावच्छिन्ने इतरपदार्थान्वयबोधजनकसामग्र्या व्यासज्यवृत्तिद्वित्वादिधर्मपर्याप्त्याश्रयीभूतयावद् (सकल)व्यक्तिष्वेव इतरपदार्थान्वयविषयकबोधो जायते न त्वेकव्यक्ताविति कार्यकारणभावस्यापि कल्पना न संभवति—'अत्राकाशौ स्तः' इत्यत्र व्यभिचारात्, अत्र व्यासज्यवृत्तिद्वि-

यत्तु द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धावुद्देश्यतावच्छेदकव्यापकता नियमतो विधेयसंसर्गे भासते इतिव्युत्पत्तिः, यत्र चोद्देश्यतावच्छेदकविशिष्टाधिकरणाप्रसिद्धया तद्व्यापकत्वमप्रसिद्धं तत्रापि खण्डशः प्रसिद्धानां तत्तद्घटकपदार्थानां विशेष्यविशेषणभावापन्नानां भानसंभवान्न 'पीतशङ्खावत्र' इत्यादौ तादृश

---

त्वस्यान्वयितावच्छेदकत्वेपि द्वित्वपर्याप्त्यऽनाश्रयीभूतायामप्याकाशैकव्यक्तावेतद्देशवृत्तित्वाश्रयत्वरूपपदार्थान्तरस्यान्वयादित्यर्थः । तथा च प्रकृतेपि द्वित्वपर्याप्त्यऽनाश्रयीभूतायामप्येकघटव्यक्तावेतद्देशवृत्तित्वाश्रयत्वरूपपदार्थान्तरस्यान्वयसंभवाद् एतद्देशे एकघटव्यक्तिदशायामपि 'अत्र घटौ स्तः' 'अत्र घटाः सन्ति' इति प्रयोगः स्यादेव बाधकाभावादिति भावः । द्वित्वादिनेति तृतीयार्थः प्रकारत्वम्, द्वित्वप्रकारकैकव्यक्तिमात्रविषयक इत्यर्थः ।

एकघटव्यक्तिदशायाम् 'अत्र घटौ स्तः' इतिप्रयोगस्याप्रामाण्योपपादकं मतान्तरं परिहारायानुवदति— यत्त्विति, यस्मिन् बोधे उद्देश्यता द्वित्वावच्छिन्ना भवति तस्मिन् बोधे नियमेनोद्देश्यतावच्छेदकव्यापकता विधेयसंसर्गे भासते इति नियमः, यथा 'नीलौ घटौ' इत्युक्ते घटत्वसमानाधिकरणद्वित्वव्यापकता विधेयस्य नीलत्वस्य संसर्गे समवाये भासते तथा च 'अत्र घटौ स्तः' इत्यत्रापि घटत्वसमानाधिकरणद्वित्वव्यापकत्वं विधेयसंसर्गे=एतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्य संसर्गे स्वरूपसंबन्धे भासते ( आश्रयत्वस्य स्वरूपसंबन्धेन वर्तमानत्वात् ) इति यत्र यत्रैतद्देशविद्यमानघटद्वये घटत्वसमानाधिकरणद्वित्वमस्ति तत्रैतद्देशविद्यमानघटद्वये एतद्देशवृत्तित्वाश्रयत्वस्य स्वरूपसंबन्धोपि वर्तते अर्थात् स्वरूपसंबन्धेनैतद्देशवृत्तित्वाश्रयत्वमपि वर्तेत ए तथाचैकघटादिव्यक्तिमात्राधिकरणपरस्य=एतद्देशे एकघटव्यक्तिदशायामेकघटव्यक्तावेतद्देशवृत्तित्वाश्रयत्वबोधनपरस्य 'अत्र घटौ स्तः' इतिवाक्यस्याऽप्रामाण्यं सुघटमेव=स्पष्टमेवास्ति, अप्रामाण्ये हेतुमाह— उद्देश्यतावच्छेदकेति, 'अत्र घटौ स्तः' इति वाक्येनोक्तव्युत्पत्त्या यत्र यत्र घटत्वसमानाधिकरणं द्वित्वं तत्र तत्रैतद्देशवृत्तित्वाश्रयत्वस्य संसर्ग इति प्रतिपाद्यते एतद्देशे चैक एव घटो न तु घटद्वयं घटत्वसमानाधिकरणद्वित्वं च देशान्तरस्थद्वितीयघटेप्यस्ति तत्रैतद्देशवृत्तित्वाश्रयत्वसंबन्धो नास्त्येवेति विधेयसंसर्गे घटत्वसमानाधिकरणद्वित्वव्यापकताया बाधेन बाधितार्थप्रतिपादकत्वाद् एतद्देशे एकघटव्यक्तिदशायाम् 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यापत्तिर्नास्त्येवेत्यर्थः । ननु 'अत्र पीतशङ्खौ स्तः' इत्यादौ द्वित्वसमानाधिकरणं पीतशङ्खत्वमुद्देश्यतावच्छेदकमेव प्रसिद्धं नास्ति येनैतद्देशवृत्तित्वाश्रयत्वादिविधेयसंसर्गे तद्व्यापकता स्यादिति व्यभिचारान्नैषा व्युत्पत्तिः स्वीकर्तुं शक्यते येनैकघटव्यक्तिदशायाम् 'अत्र घटौ स्तः' इतिवाक्यस्याऽप्रामाण्यमुक्तरीत्या सुघटं स्यादित्याशङ्क्योक्तम्— यत्र चेति, उद्देश्यतावच्छेदकं यद्द्वित्वसमानाधिकरणपीतशङ्खत्वं तद्विशिष्टस्याधिकरणभूतस्य पीतशङ्खस्याऽप्रसिद्धत्वेनोद्देश्यतावच्छेदकस्याप्यप्रसिद्धया तद्व्यापकत्वम्=उद्देश्यतावच्छेदकव्यापकत्वमप्रसिद्धं यत्र तत्रापि तद्घटकपदार्थानाम्=व्यापकताघटकपदार्थानां पीतत्वशङ्खत्वादीनां खण्डशः प्रसिद्धानाम्—यथा पीतत्वं पटादौ

व्युत्पत्तिभङ्गः, एवं चैकघटादिव्यक्तिमात्राधिकरणपरस्य 'अत्र घटौ स्तः' इत्यादिवाक्यस्याप्रामाण्यं सुघटमेव—उद्देश्यतावच्छेदकीभूतघटमात्रवृत्तिद्वित्वव्यापकतायास्तादृशवाक्यप्रतिपाद्याया विधेयसंसर्गे बाधादिति ।

तदपि तुच्छम्— 'अत्र घटौ स्तः' इत्यादौ द्वित्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य च तदधिकरणावृत्तिघटादिनिष्ठाभावप्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गे बाधाद् घटद्वयाधिकरणपरतादृशवाक्यस्याप्यप्रामाण्यापत्तेः । तत्तद्द्वित्व-

---

प्रसिद्धं शङ्खत्वं शुक्लशङ्खे प्रसिद्धमिति तेषाम् 'पीतशङ्खौ' इत्यत्रापि विशेष्यविशेषणभावेन भानसंभवात् न 'पीतशङ्खावत्र स्तः' इत्यत्रोक्तव्युत्पत्तेर्व्यभिचारस्तथा च 'अत्र पीतशङ्खौ स्तः' इत्यत्रापि शङ्खद्वयसत्त्वे विधेयसंसर्गे उद्देश्यतावच्छेदकव्यापकता भासते एव । ज्ञानमिदं भ्रमात्मकमित्यन्यदेतत् किं वात्र व्यापकताभानमपि भ्रमात्मकमेवास्तु. उक्तव्युत्पत्तेः भ्रमप्रमासाधारणत्वादित्यर्थः ।

परिहरति— तदपीति, एवं ह्येतद्देशे घटद्वयसत्त्वेपि घटद्वयाधिकरणपरतादृशवाक्यस्य='अत्र घटौ स्तः' इतिवाक्यस्य यदिष्टं प्रामाण्यं तन्न स्यादित्यन्वयः । तथा हि— व्यापकत्वं द्विविधं भवति भेदघटितमत्यन्ताभावघटितं च, तत्र भेदघटितं हि तत्समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वं ज्ञेयं यथा— धूमसमानाधिकरणो यो जलादिमान्नेत्याकारकोऽन्योन्याभावस्तत्प्रतियोगी जलादिमान् प्रतियोगितावच्छेदकत्वं जलादौ प्राप्तं न तु वह्नौ धूमाधिकरणे वह्निमान्नेतिभेदस्याऽसंभवाद् धूमाधिकरणस्य वह्निमत्त्वादेव तथा च वह्नौ धूमसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपं व्यापकत्वं प्राप्तम्, अत्यन्ताभावघटितं च व्यापकत्वम्— तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवत्त्वं ज्ञेयं यथा— धूमसमानाधिकरणो यः पर्वते जलं नेत्यन्ताभावस्तत्प्रतियोगि जलं प्रतियोगितावच्छेदकं यज्जलत्वं तद्वत्त्वं जले प्राप्तं वह्नित्वं च तादृशाभावप्रतियोगितानवच्छेदकमेव तद्वत्त्वं वह्नौ प्राप्तमिति वह्निर्धूमव्यापकः । प्रकृते च 'अत्र घटौ स्तः' इत्यत्र विधेयसंसर्गे= एतद्देशवृत्तित्वाश्रयत्वस्य विधेयस्य संसर्गे स्वरूपसंबन्धे उद्देश्यतावच्छेदकव्यापकत्वम्=घटत्वसमानाधिकरणद्वित्वव्यापकत्वं त्वदुक्तव्युत्पत्त्याऽपेक्षितमस्ति तन्न संभवति. तथा हि तदधिकरणावृत्तिघटाद्यन्तरनिष्ठाभावप्रतियोगितावच्छेदकीभूते इति— एतदधिकरणावृत्ति यद् घटद्वयं तस्मिन् एतद्देशवृत्तित्वाश्रयत्वसंसर्गवन्नेति भेदो वर्तते एव तादृशान्योन्याभावप्रतियोगी ह्येतद्देशवृत्तित्वाश्रयत्वसंसर्गवदेव तादृशान्योन्याभावप्रतियोगितावच्छेदकं चैतद्देशवृत्तित्वाश्रयत्वसंसर्ग एवेति तदधिकरणावृत्तिघटाद्यन्तरनिष्ठाभाव ( भेद ) प्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गे भेदघटितं यद् द्वित्वसमानाधिकरणाभाव ( भेद. ) प्रतियोगितानवच्छेदकत्वं व्यापकत्वं तदपि नास्ति यतः— एतद्देशावृत्तिघटद्वयेपि द्वित्वं तु वर्तते एतद्देशवृत्तित्वाश्रयत्वसंसर्गवत्त्वं तु न वर्तते इत्येतद्देशावृत्तिघटद्वये य एतद्देशवृत्तित्वाश्रयत्वसंसर्गवन्नेतिभेदस्तादृशभेदप्र-

समानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य तत्तद्विधेयसंसर्गांशे भानोपगमस्तु न संभवति— तत्तद्द्वित्वत्वेनानुपस्थितेः ।

न च तदवच्छिन्नस्य संसर्गतया भाने तेन रूपेणोपस्थितेर्नाऽपेक्षेति वाच्यम्, तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमित्याकार-

---

तियोगितावच्छेदकत्वमेवोक्तरीत्या विधेयस्यैतद्देशवृत्तित्वाश्रयत्वस्य संसर्गे प्राप्तं न तूक्तं व्यापकत्वरूपं तादृशसंसर्गवन्नेतिभेदप्रतियोगितानवच्छेदकत्वम् । एवमत्यन्ताभावघटितं यद् द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकवत्त्वं व्यापकत्वं तदपि नास्ति यतः—एतद्देशावृत्तिघटद्वये द्वित्वं तु वर्तते एतद्देशवृत्तित्वाश्रयत्वसंसर्गस्तु न वर्तत इत्येतद्देशावृत्तिघटद्वये य एतद्देशवृत्तित्वाश्रयत्वसंसर्गस्याभावस्तादृशाभावप्रतियोगितावच्छेदकं यत् तादृशसंसर्गत्वं तद्वत्त्वमेव तादृशे विधेयसंसर्गे प्राप्तं न तूक्तं व्यापकत्वरूपं द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकवत्त्वमिति विधेयसंसर्गे उक्तस्य द्विविधस्यापि व्यापकत्वस्य बाधाद् बाधितार्थबोधकत्वाद् घटद्वयाधिकरणपरस्य=घटद्वयाधिकरणबोधकस्यापि ( घटद्वयसत्तादशायामपि ) तादृशवाक्यस्य=' अत्र घटौ स्तः ' इतिवाक्यस्याऽप्रामाण्यं स्यादित्यर्थः । ननु न घटत्वसमानाधिकरणद्वित्वमात्र ( यावद्द्वित्व ) व्यापकत्वं विधेयसंसर्गे उच्यते येनैतद्देशावृत्तिघटद्वये द्वित्वसत्त्वेऽप्येतद्देशवृत्तित्वाश्रयत्वसंसर्गस्याऽसत्त्वेनाऽव्यापकत्वं स्यात् किं तु तत्तद्द्वित्वसमानाधिकरणाभाव ( भेद ) प्रतियोगितानवच्छेदकत्वरूपं तत्तद्द्वित्वव्यापकत्वमुच्यते. अस्ति चैतद्देशवृत्तिघटद्वयनिष्ठतद्द्वित्वव्यापकत्वं विधेयसंसर्गे द्वित्ववत्येतद्देशवृत्तिघटद्वये एतद्देशवृत्तित्वाश्रयत्वसंसर्गस्य स्वरूपसंबन्धस्य सत्त्वात् तथा च घटद्वयसत्तादशायाम् ' अत्र घटौ स्तः ' इतिवाक्यस्य नाऽप्रामाण्यापत्तिरित्याशङ्क्याह— तत्तद्द्वित्वेति । न संभवतीत्यत्र हेतुमाह— तत्तद्द्वित्वत्वेनेति, ' अत्र घटौ स्तः ' इत्यादौ द्विवचनेन द्वित्वस्य सामान्यतो द्वित्वत्वेनैव रूपेणोपस्थितिर्भवति न तु तद्द्वित्वत्वेन रूपेण येन त्वदीयेनाऽनेन निवेशेनोक्तम् ' अत्र घटौ स्तः ' इत्यस्याऽप्रामाण्यं परिहृतं स्यादित्यर्थः । कृष्णंभट्टमहाशयानामभिप्रायस्तु तेषामेव टीकायां द्रष्टव्यः ।

ननु संसर्गस्य संसर्गघटकपदार्थानां चोपस्थितेरपेक्षा न भवति. अत्र च विधेयसंसर्गे एव व्यापकत्वभानमुक्तं विधेयसंसर्गश्चात्र तद्द्वित्वव्यापकीभूतैतद्देशवृत्तित्वाश्रयत्वसंसर्गः ( स्वरूपसंबन्धः ) एवेति तदवच्छिन्नस्य=तद्द्वित्वत्वावच्छिन्नस्य तद्द्वित्वस्य संसर्गतया=संसर्गघटकतया भाने स्वीकृते तेन रूपेण=तद्द्वित्वत्वेन रूपेणोपस्थितेरपेक्षात्र नास्ति येन तद्द्वित्वत्वेन रूपेणोपस्थित्यभावाद् विधेयसंसर्गस्य तद्द्वित्वव्यापकत्वेन भानं न स्यादित्याशङ्क्याह— न चेति । परिहारमाह— तत्संसर्गेति, तत्संसर्गावच्छिन्ना=तद्द्वित्वव्यापकैतद्देशवृत्तित्वाश्रयत्वस्य स्वरूपसंसर्गावच्छिन्ना या तत्प्रकारता=एतद्देशवृत्तित्वाश्रयत्वनिष्ठा प्रकारता तन्निरूपिता या तत्तद्विशेष्यता=घटादिनिष्ठविशेष्यता तच्छालिशाब्दबोधपरम् ' अत्र घटौ स्तः ' इति वाक्यमित्याकारकतात्पर्यज्ञाने उक्त-

कृतात्पर्यज्ञाने संसर्गस्य विशेषणतया तद्भाननिर्वाहाय संसर्गघटकोपस्थितेरपि शाब्दबोधात् प्रागावश्यकत्वात् । प्रकृतसंसर्गेणैकपदार्थविशिष्टापरपदार्थबोधपरत्वज्ञानस्य प्रकृतवाक्यार्थविषयकतया प्रागसंभवेनोपदर्शिततात्पर्यज्ञानस्यैव शाब्दधीहेतुत्वोपगमात् . एवं वाक्यार्थघटकसंसर्गस्याननुगमे 'घटौ स्तः' इत्यादौ वाक्यभेदप्रसङ्गाच्च ।

---

संसर्गो विशेषणत्वेनैव भासते प्रकारतावच्छेदकत्वादिति तद्भाननिर्वाहाय=उक्तसंसर्गभानस्य निर्वाहार्थं संसर्गघटकोपस्थितेः=संसर्गघटकस्य तद्द्वित्वादेरप्युपस्थितेः शाब्दबोधात् पूर्वमावश्यकत्वात् ( उपस्थितिं विना विशेषणीभूतसंसर्गघटकतद्द्वित्वादेर्भानासंभवात् ) 'अत्र घटौ स्तः' इत्यत्र च द्विवचनेन द्वित्वस्य तद्द्वित्वत्वेनोपस्थितेरभावाद् न तद्द्वित्वव्यापकत्वस्यैतद्देशवृत्तित्वाश्रयत्वसंसर्ग भानं संभवति किं तु द्वित्वत्वेनोपस्थितद्वित्वव्यापकत्वस्यैव. द्वित्वव्यापकत्वं तु विधेयसंसर्गे नास्त्येवेति प्रतिपादितमेवेति घटद्वयदशायामपि 'अत्र घटौ स्तः' इतिवाक्यस्याप्रामाण्यं तदवस्थमेवेत्यर्थः । ननु यद्युक्ततात्पर्यज्ञानस्यात्र शाब्दबोधकारणत्वं स्यात्तदोक्ततात्पर्यज्ञाने उक्तसंसर्गस्य प्रकारतावच्छेदकतया विशेषणत्वेन तस्य तद्घटकतद्द्वित्वादिपदार्थानां च भाननिर्वाहायोपस्थितेरपेक्षा स्यात् तथा च द्वित्वस्य तद्द्वित्वत्वेन रूपेणोपस्थित्यभावात् तद्द्वित्वव्यापकत्वभानं विधेयसंसर्गे न स्यादपि न चैवमस्ति— उक्ततात्पर्यज्ञानस्य कारणत्वास्वीकारात् किं तु प्रकृतसंसर्गेण= तद्द्वित्वव्यापकैतद्देशवृत्तित्वाश्रयत्वीयस्वरूपसंसर्गेण एकपदार्थविशिष्टः=एतद्देशवृत्तित्वविशिष्टो योऽपरपदार्थः=घटादिस्तद्बोधनपरम् 'अत्र घटौ स्तः' इति वाक्यमित्याकारकतात्पर्यज्ञानस्यैवात्र शाब्दबोधकारणत्वं स्वीक्रियते अस्मिंश्च तात्पर्यज्ञाने नोक्तसंसर्गस्य किंचिदवच्छेदकतया प्रवेशो येनावच्छेदकत्वेन विशेषणत्वप्राप्त्या तस्य तद्घटकतद्द्वित्वादेश्च भानार्थमुपस्थितेरपेक्षा स्यात्, तथा चोक्तसंसर्गघटकतद्द्वित्वस्य तद्द्वित्वत्वेनोपस्थित्यभावेपि तद्व्यापकत्वस्य भाने न काप्यनुपपत्तिः ( शेषं पूर्ववत् ) इत्याशङ्कयाह— प्रकृतेति, प्रकृतसंसर्गेणेत्याद्युक्ततात्पर्यज्ञानं हि प्रकृतवाक्यार्थविषयकमेव= 'अत्र घटौः स्तः' इति वाक्यार्थबोधस्वरूपमेवेत्यस्य तात्पर्यज्ञानस्य शाब्दबोधात् प्रागऽसंभवेन कारणत्वं न संभवतीत्युपदर्शितं यत् तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमेतद्वाक्यमित्याकारकं तात्पर्यज्ञानं तस्यैवात्र शाब्दबोधकारणत्वं स्वीकार्यं तत्र चोक्तसंसर्गस्य प्रकारतावच्छेदकतया विशेषणत्वेन तस्य तद्घटकतद्द्वित्वादीनां च भानायोपस्थितेरावश्यकत्वात् तद्द्वित्वत्वेन तद्द्वित्वस्योपस्थितेरभावाच्च न विधेयसंसर्गे तद्द्वित्वव्यापकत्वभानं संभवति. उपस्थितिश्च द्वित्वत्वेन द्वित्वसामान्यस्यास्ति द्वित्वमात्रव्यापकत्वं च विधेयसंसर्गे नास्त्येवेति प्रदर्शितमेवेति घटद्वयदशायामपि 'अत्र घटौ स्तः' इत्यस्याऽप्रामाण्यं तदवस्थमेवेत्यर्थः । तद्द्वित्वस्य संसर्गघटकत्वे दोषान्तरमप्याह— एवमिति, संसर्गभेदे वाक्यभेदनियमोस्ति. अत्र च तद्द्वित्वं संसर्गघटकम्. द्वित्वं चापेक्षाबुद्धिजन्यमपेक्षाबुद्धिनाशनाश्यं च बुद्धिश्च तृतीयक्षणे नश्यत्येवेति तया सह तत्तद्द्वित्वानामपि नाशेन तद्घटित—

**अत्रोच्यते— व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यतादृश-धर्मवत्त्वमपि विधेयसंसर्गतया भासते इति व्युत्पत्तिः । व्याप्यत्वं च तद्वदन्यावृत्तित्वं व्यतिरेकिविधेयस्थले । तादृशधर्मवत्त्वं । चोद्देश्यतावच्छेदकताघटकसंबन्धेन बोध्यम् ।**

---

संसर्गस्यापि नाशे प्राप्ते भिन्नभिन्नसंसर्गाणां च संसर्गत्वे प्राप्ते संसर्गभेदाद्वाक्यभेदप्रसङ्ग इत्यर्थः । वाक्यार्थज्ञानभेदे एव वाक्यभेद इत्युच्यते वाक्यार्थज्ञानं च संसर्गज्ञानमेव संसर्गज्ञानं चात्र संसर्ग-घटकतत्तद्द्वित्वानां भेदेन संसर्गभेदात् प्रतितृतीयक्षणं भिन्नं भिन्नं स्यादेवेति भावः । अत्र- "वाक्यार्थघटकसंसर्गस्याननुगमे 'अत्र घटौ स्तः' इत्यादौ वाक्यभेदप्रसङ्गाच्चेति— एतद्देशवृत्तित्वं प्रकारो द्वौ घटौ विशेष्यौ तत्तद्द्वित्वव्यापकैतद्देशवृत्तित्वीयस्वरूपमेतद्देशवृत्तित्वसंबन्धस्तत्र तत्तद्द्वित्वं तत्तदपेक्षाबुद्धिजन्यमपेक्षाबुद्धिनाशनाश्यं चेति, नानाविधसंसर्गभेद एव वाक्यभेदनियामकः, संसर्गज्ञानं वाक्यार्थज्ञानं शाब्दबोध इत्येते पर्यायशब्दाः" इति कृष्णंभट्टाः । द्वित्व-सामान्यस्य संसर्गघटकत्वे तु तस्य द्वित्वत्वेन रूपेणानुगमसंभवात् तद्घटितसंसर्गस्याप्यनुगमः संभवत्येव । तत्तद्द्वित्वव्यक्तीनां त्वनुगमो नैव संभवतीत्यर्थः ।

अथेत्यादिना ( पृ. १५७ ) आशङ्कितस्योत्तरमारभते— अत्रोच्यते इत्यादिना । व्यासज्य-वृत्तिधर्मेण द्वित्वादिनाऽवच्छिन्ना उद्देश्यता यस्यामेतादृशशाब्दबुद्धौ, यथा— 'अत्र घटौ स्तः' इत्यत्र घटनिष्ठोद्देश्यता व्यासज्यवृत्तिद्वित्वेनावच्छिन्नास्तीत्येतादृशवाक्यजन्यशाब्दबोधे, स्वव्याप्ये-त्यत्र स्वम्=विधेयम्, तथा चैतद्देशवृत्तित्वाश्रयत्वलक्षणविधेयव्याप्यो यस्तादृशधर्मः=व्यासज्यवृत्तिधर्मो द्वित्वं तद्वत्त्वमपि विधेयस्य ( एतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्य ) संसर्गतया भासते इति व्युत्पत्तिः, व्याप्यत्वं चात्र व्यतिरेकिविधेयस्थले ( अत्यन्ताभावप्रतियोगिविधेयकस्थले ) तद्वदन्यावृत्तित्वरूपं बोध्यम्, तादृशधर्मवत्त्वम्=विधेयव्याप्यव्यासज्यवृत्तिद्वित्वादिधर्मवत्त्वं चोद्देश्यतावच्छेदकताघटकसंबन्धेन=उद्देश्यतावच्छेदकघटत्वादिव्याप्यपर्याप्तिसंबन्धेन बोध्यम्, तथा च 'अत्र घटौ स्तः' इत्यत्रैतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्य यथा स्वरूपसंबन्धेनान्वयो भवति तथा एतद्देशवृत्तित्वाश्रयत्वव्याप्यद्वित्ववत्त्वसंबन्धेनाप्यन्वयो भवतीति प्राप्तम्, संबन्धभूतं द्वित्ववत्त्वमपि उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन बोध्यमित्यर्थः । एतद्देशे घटद्वयसत्त्वे तादृशघटद्वये घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वं ( द्वित्वं ) वर्तत एवेति तादृशद्वित्ववत्त्वसंबन्धेन घटद्वये एव विधेयस्यैतद्देशवृत्तित्वाश्रयत्वस्यान्वयः संभवति न त्वेकस्मिन् घटे तत्रोक्तसंबन्धेन संबन्धभूतद्वित्ववत्त्वस्यासंभवादिति घटद्वयसत्त्वे 'अत्र घटौ स्तः' इति प्रयोग उपपद्यते । एतद्देशवर्तमानघटद्वयवृत्ति द्वित्वं चात्र विधेयव्याप्यमेव एतद्द्वित्वस्यैतद्देशवृत्तित्वाश्रयत्वरूपविधेयाभाववति देशान्तरस्थघटेऽसत्त्वाद् विधेयवत्येतद्देशवृत्तिघटद्वये एव सत्त्वाच्चेति बोध्यम् । एतद्देशे एकघटसत्त्वे च वर्तमानैकघटे उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन विधेयव्याप्यद्वित्ववत्त्वस्याभावाद् घटत्वव्याप्यपर्याप्तिसंबन्धावच्छिन्नविधेयव्याप्यद्वित्ववत्त्वसंबन्धेनैतद्देशवृत्तित्वाश्रयत्वरूपविधे-

'अत्र घटौ स्तः' इत्यादावेतद्देशवर्तमानत्वादिरूपविधेयस्य तद्वदन्यावृत्तित्वरूपव्याप्तिमच्चैतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव, घटत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छेदकताघटकसंबन्धावच्छिन्नतद्वत्त्वं च घटादौ

---

यस्याप्यन्वयो न संभवति— संबन्धाभावे संबन्ध्यन्वयासंभवादित्येकघटसत्त्वे 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यं नोपपद्यते, यद्यप्येतद्देशस्थघटे देशान्तरस्थघटे च मिलित्वा घटत्वव्याप्यपर्याप्तिसंबन्धेनैकं द्वित्वमस्त्येव तथापि तद् द्वित्वं विधेयव्याप्यं नास्ति—एतद्देशवृत्तित्वाश्रयत्वरूपविधेयाभाववति देशान्तरस्थघटेपि तस्य सत्त्वादिति न तद् द्वित्वं संबन्धघटकत्वेन ग्राह्यम् । एकघटसत्त्वदशायां तत्र विधेयव्याप्यं द्वित्वं नैवोपलब्धुं शक्यते येन तद्वत्त्वसंबन्धेनैकघटे विधेयान्वयः स्यादिति यावत् ।

एतद्देशे एकघटैकपटसत्त्वेपि 'अत्र घटौ स्तः' इति प्रयोगो न संभवतीत्याह—'अत्र घटौ स्तः' इत्यादिना । एतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे=एतद्देशे एकघटैकपटसत्त्वे. मात्रपदेन द्वितीयघटव्यक्तिनिरासः, एतद्देशवर्तमानत्वादिरूपविधेयस्य=एतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्य, तद्वदन्यावृत्तित्वरूपव्याप्तिमच्च=व्याप्यं च घटपटोभयनिष्ठमेव द्वित्वं न तु घटद्वयनिष्ठं द्वित्वं घटद्वयनिष्ठद्वित्वस्यैतद्देशवृत्तित्वाश्रयत्वरूपविधेयाभाववति देशान्तरस्थघटेपि सत्त्वेन विधेयव्याप्यत्वाभावात् . तथा चैकघटैकपटसत्त्वदशायां घटादौ घटत्वव्याप्यपर्याप्तिरूपोद्देश्यतावच्छेदकताघटकसंबन्धावच्छिन्नतद्वत्त्वम्=घटत्वव्याप्यपर्याप्तिरूपो य उद्देश्यतावच्छेदकताघटकसंबन्धस्तदवच्छिन्नतद्वत्त्वम् अर्थात्— उद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन तद्वत्त्वम्=विधेयव्याप्यद्वित्ववत्त्वं बाधितमेव ( विधेयव्याप्यद्वित्वस्यात्र घटत्वपटत्वोभयव्याप्यपर्याप्तिसंबन्धेनैव सत्त्वात् ) इति न तादृशवाक्यस्य='अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यमित्यन्वयः । अर्थात् 'अत्र घटौ स्तः' इत्यादि व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबोधस्थले विधेयव्याप्यव्यासज्यवृत्तिद्वित्ववत्त्वसंबन्धेन विधेयान्वयो भवतीति स्वीकृतम् , तथा चैतद्देशे एकघटैकपटसत्त्वदशायामेतद्देशवृत्तित्वाश्रयत्वरूपविधेयव्याप्यद्वित्ववत्त्वरूपो विधेयसंबन्धो घटपटोभयस्मिन्नेवास्ति ( इति 'अत्र घटपटौ स्तः' इतिवाक्यस्य प्रामाण्यमुपपद्यते ) न त्वेकस्मिन् घटे. पटेन सहवर्तमानैकस्मिन्नेतद्घटे घटपटोभयगतविधेयव्याप्यद्वित्वस्य घटत्वपटत्वोभयव्याप्यपर्याप्तिसंबन्धेन सत्त्वेपि घटत्वव्याप्यपर्याप्तिसंबन्धेनाऽसत्त्वात् , यच्च द्वित्वम् एतद्देशस्थे देशान्तरस्थे च मिलित्वा घटद्वयेस्ति तस्यैतद्देशवृत्तित्वाश्रयत्वरूपविधेयव्याप्यत्वं नास्ति— एतद्देशवृत्तित्वाश्रयत्वरूपविधेयाभाववति देशान्तरस्थघटेपि सत्त्वात् , तथा चात्र पटेन सह वर्तमानैकघटे घटत्वव्याप्यपर्याप्तिसंबन्धेन विधेयव्याप्यद्वित्ववत्त्वस्य संसर्गभूतस्याऽभावात् तादृशसंसर्गेणैतद्देशवृत्तित्वाश्रयत्वरूपविधेयस्यान्वयोपि न संभवति ( संबन्धाभावे संबन्ध्यन्वयाभावस्यावश्यंभावात् ) इत्येकघटैकपटसत्त्वेपि 'अत्र घटौ स्तः' इतिप्रयोगस्यापत्तिर्नास्त्येवेत्यर्थः । घटपटोभयसत्त्वे 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यनिरासार्थं तादृशधर्मवत्त्वम्=विधेयव्याप्यव्यासज्यवृत्तिद्वित्वा-

बाधितमिति न तादृशवाक्यस्य प्रामाण्यम् । अधिकरणस्य घटद्वयादिमत्त्वे च घटत्वादिव्याप्यं द्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसंबन्धेन तद्वत्त्वं घटादावबाधितमिति तादृशवाक्यस्य प्रामाण्यं निर्वहति ।

केवलान्वयिविधेयकस्थले च द्वित्वत्वाद्यवच्छिन्नव्यापकत्वमेव संसर्गघटकम्, केवलान्वियिनि तादृशव्यापकताया अक्षतत्वात्, न तु तत्तद्द्वित्वत्वावच्छिन्नव्यापकत्वमिति न पूर्वोक्तदोषावकाशः ।

---

द्विधर्मवत्त्वम् उद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धेनोक्तं तथा च 'अत्र घटौ स्तः' इत्यत्रोद्देश्यतावच्छेदकं घटत्वमेव घटत्वव्याप्यपर्याप्तिसंबन्धेन चात्र घटे विधेयव्याप्यं द्वित्वं नास्तीति विधेयव्याप्यद्वित्ववत्त्वसंबन्धेन विधेयान्वयासंभवात् 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यापत्तिर्नास्त्येव, अन्यथा संबन्धान्तरेणात्र विधेयव्याप्यद्वित्ववत्त्वस्यैकघटेपि संभवात् प्रामाण्यापत्तिः स्यादेवेत्यवधेयम् । यच्च घटद्वयनिष्ठं द्वित्वं घटत्वव्याप्यं तन्न विधेयव्याप्यम्— विधेयाभाववति देशान्तरस्थघटेपि सत्त्वात्, यच्च घटपटोभयनिष्ठं द्वित्वं विधेयव्याप्यं तन्न घटत्वव्याप्यं घटत्वाभाववति पटेपि सत्त्वादितिसारः एतद्देशे घटद्वयसत्त्वे 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यमुपपादयति— अधिकरणस्येति, पूर्वमेवेदं व्याख्यातम् । तथा=एतद्देशवृत्तित्वाश्रयत्वरूपविधेयव्याप्तिमत् ( विधेयव्याप्यमित्यर्थः ), तद्वत्त्वम्=विधेयव्याप्यद्वित्ववत्त्वम्, घटद्वये विधेयव्याप्यद्वित्ववत्त्वं घटत्वव्याप्यपर्याप्तिसंबन्धेनास्त्येवेति तादृशद्वित्ववत्त्वसंबन्धेन विधेयान्वयोपपत्त्या 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यमुपपद्यते इति सारः । एवकारो भिन्नक्रम इति 'घटत्वादिव्याप्यमेव द्वित्वं तथा' इत्यन्वयः ।

ननु 'घटौ प्रमेयौ' इत्यादिकेवलान्वयिविधेयकस्थले विधेयव्याप्यत्वं तद्वदन्यावृत्तित्वं यदुक्तं तन्न संभवति—केवलान्वयिवदन्यस्याऽप्रसिद्धेरित्याशङ्क्याह— केवलान्वयीति, केवलान्वयिविधेयकस्थले विधेयव्याप्यत्वं संसर्गप्रविष्टं नास्ति किं तु द्वित्वत्वावच्छिन्नव्यापकत्वम्=द्वित्वनिष्ठव्याप्यत्वनिरूपितं केवलान्वयिप्रमेयत्वादिरूपविधेयनिष्ठं व्यापकत्वमेव संसर्गघटकं ज्ञेयं केवलान्वयिनि प्रमेयत्वादौ व्यापकत्वं चाक्षतमेवेत्यन्वयः, अर्थात्— 'घटौ प्रमेयौ' इत्यत्र स्वनिष्ठव्यापकतानिरूपकोद्देश्यतावच्छेदकाश्रयत्वसंबन्धेन विधेयस्य प्रमेयत्वस्यान्वयो भवतीति स्वीकृतम्, स्वं प्रमेयत्वं तन्निष्ठव्यापकतानिरूपकं यदुद्देश्यतावच्छेदकं प्रमेयत्वव्याप्यं द्वित्वं तदाश्रयत्वम्=तद्वत्त्वं घटद्वये एवास्तीति तादृशद्वित्ववत्त्वसंबन्धेन घटद्वये एवात्र प्रमेयत्वस्यान्वयः संभवतीति 'अत्र घटौ प्रमेयौ' इतिवाक्यस्य घटद्वयसत्त्वे एव प्रामाण्यमुपपद्यते, संबन्धभूतं व्यापकतानिरूपकद्वित्ववत्त्वं चोद्देश्यतावच्छेदकव्याप्यपर्याप्तिसंबन्धेन बोध्यं तेनैकघटैकपटदशायां यद् व्यापकतानिरूपकं घटपटोभयगतं द्वित्वं तत्तूद्देश्यतावच्छेदकघटत्वव्याप्यपर्याप्तिसंबन्धेन नास्ति तस्य घटत्वपटत्वोभयव्याप्यपर्याप्तिसंबन्धेन वर्तमानत्वात्, यच्च एतद्देशस्थे देशान्तरस्थे च घटद्वये मिलित्वा घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्वमस्ति तत्तूक्तव्यापकताया निरूपकमेव नास्ति— अत्र प्रमेयत्व-

'घटावानयति चैत्रः' इत्यादौ चैत्रकर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिम-न्निष्ठनिरूपकताकाधेयत्वादिसंबन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नस्तेन चैत्रादा-वेकघटादिव्यक्तिमात्राऽऽनयनकर्तृत्वे न तादृशप्रयोगः । द्वित्वादिमत्त्वं च प्रकार-तावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसंबन्धेन बोध्यं तेन चैत्रस्य पटादिसहित-कघटादिव्यक्त्यानयनकर्तृत्वेपि न तादृशप्रयोगः । एवमन्यत्राप्यूहनीयम् ।

---

निष्ठव्यापकताया एतद्देशवृत्तिपदार्थद्वयवृत्तिद्वित्वनिरूपितत्वादिति न देशान्तरस्थघटव्यासक्तद्वित्व-वत्त्वसंबन्धेनैकघटे विधेयान्वयः संभवतीत्येकघटसत्त्वदशायाम् ' अत्र घटौ प्रमेयौ ' इतिवाक्यस्य प्रामाण्यापत्तिर्नास्त्येवेत्यर्थः । नन्वत्र द्वित्वपदेन तत्तद्द्वित्वव्यक्तीनां ग्रहणे " एवम् १६२ पृ. " इत्यादिनोक्तोवाक्यभेदप्रसङ्गः स्यादित्याशङ्क्याह– न त्विति, द्वित्वपदेन सामान्यतो द्वित्व-त्वावच्छिन्नस्यैव ग्रहणात् तत्तद्द्वित्वव्यक्तीनां चाऽग्रहणात् पूर्वोक्तस्य ( १६२ ) वाक्यभेदप्रसङ्ग-रूपदोषस्य प्रसक्तिर्नास्तीत्यर्थः ।

घटावानयतीति–'घटावानयति चैत्रः' इत्यत्र चैत्रकर्तृकानयनकर्मत्वमेव विधेयं विशेष्यं च तत्रा-नयनकर्मत्वे घटाधेयमस्तीति तत्राधेयत्वं वर्तते तथा चात्र चैत्रकर्तृकानयनकर्मत्वव्याप्यं यद्द्वित्वं ता-दृशद्वित्ववन्निष्ठनिरूपकताकाधेयत्वसंबन्धेन= तादृशद्वित्ववद् यद् घटद्वयं तन्निष्ठा याऽऽधारता तन्नि-रूपिता या कर्मत्वनिष्ठाऽऽधेयता तादृशाधेयतारूपसंबन्धेन चैत्रकर्तृकानयनकर्मतायां घटादेरन्वयो व्युत्पन्न इति चैत्रकर्तृकैकघटानयनदशायाम् ' घटावानयति चैत्रः ' इतिवाक्यस्य प्रामाण्यप्रसङ्गो नास्ति–तादृशैकघटे संबन्धघटकस्य चैत्रकर्तृकानयनकर्मत्वव्याप्यद्वित्वस्याभावात् एकघटकर्मका-नयनकर्मतानिष्ठाधेयतायां विवक्षितस्यानयनकर्मत्वव्याप्यद्वित्ववन्निष्ठाधारतानिरूपितत्वस्याभावाच्च कर्मतायां संबन्धभूतस्यानयनकर्मत्वव्याप्यद्वित्ववन्निष्ठाधारतानिरूपिताधेयत्वस्याभावान्न तेन संब-न्धेन घटान्वयः संभवति, यच्चैतद्देशस्थे देशान्तरस्थे च घटद्वये मिलित्वा द्वित्वमस्ति तत्त्वाऽऽनय-नकर्मत्वव्याप्यमेव नास्ति– आनयनकर्मत्वाभाववति देशान्तरस्थघटेपि सत्त्वात् । घटद्वयानयनद-शायां तु घटद्वयनिष्ठं द्वित्वमाऽऽनयनकर्मत्वव्याप्यमस्ति तादृशद्वित्ववद् यद् घटद्वयं तन्निष्ठाधारता-निरूपिताधेयता चानयनकर्मतायां वर्तते इति तादृशाधेयतासंबन्धेन कर्मतायां घटद्वयस्यान्वयः संभवतीति ' घटावानयति ' इति प्रयोगस्य प्रामाण्यमुपपद्यते इत्यर्थः । तादृशप्रयोगः=' घटा-वानयति ' इति प्रयोगः, भवतीति शेषः । किं चात्र द्वित्ववत्त्वं प्रकारतावच्छेदकीभूतघटत्वव्या-प्यपर्याप्तिसंबन्धेन बोध्यं तथा च ' घटावानयति ' इत्यत्र प्रकारतावच्छेदकं घटत्वमेवेति घटद्व-यानयनदशायामेव घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वोपपत्त्या ' घटावानयति ' इति प्रयोग उपपद्यते, एकघटैकपटानयनदशायां प्रकारतावच्छेदकं घटत्वपटत्वोभयमेव न केवलघटत्वमिति घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्ववत्त्वाभावान्न ' घटावानयति ' इति प्रयोगस्य प्रामाण्यापत्तिः किं तु ' घटपटावानयति ' इति प्रयोगस्यैव प्रामाण्यं स्यादित्याह–द्वित्वादिमत्त्वं चेति । अत्र कर्मतायां घटस्याऽन्वयाद् घटः प्रकारो घटत्वं प्रकारतावच्छेदकम् । अत्र– " एवमन्यत्रापि=

**यत्रानेकवृत्तिधर्मो द्वित्वान्वयितावच्छेदकतया भासते तत्रोभयादिनैव समं पदार्थान्तरस्यान्वयः। यत्रैकमात्रवृत्तिस्तथा तत्रैकेनापि, व्युत्पत्तिभेदावलम्बनात् कार्यकारणभाववैचित्र्याच्च सर्वं समञ्जसमित्यपि वदन्ति।**

**अथ घटादिव्यक्तिभेदेनाऽऽनयनकर्मता भिन्नेति प्रतिसंदधानस्य पुंसः 'घटावानयति' इतिवाक्याच्छाब्दबोधानुपपत्तिः— तस्य कर्मतात्त्वावच्छेदेनाऽऽधेयता-**

'घटानाऽऽनयति' इति बहुवचनान्तप्रयोगेपि चैत्रकर्मकानयनकर्मतादिव्याप्यबहुत्वादिमन्निष्ठ-निरूपकताकाधेयत्वादिसंबन्धेन कर्मतायां तादृशप्रकारता बोध्येत्यप्यूहनीयमित्यर्थः।" इति कृष्णंभट्टाः।

मतान्तरमाह— यत्रेति, यथा 'अत्र घटौ स्तः' इत्यत्राऽनेकवृत्तिधर्मो घटत्वमेव द्वित्वान्वयितावच्छेदकमस्तीत्यत्रोभयेनैव=घटद्वयेनैव पदार्थान्तरस्य=एतद्देशवृत्तित्वाश्रयत्वस्यान्वयः स्वीकर्तव्य इत्येकघटसत्त्वदशायाम् 'अत्र घटौ स्तः' इतिप्रयोगापत्तिर्नास्ति वर्तमानैकघटे एतद्देशवृत्तित्वाश्रयत्वस्यान्वयास्वीकारात्। एकघटैकपटसत्त्वदशायां च द्वित्वान्वयितावच्छेदकं घटत्वपटत्वोभयमेव न केवलघटत्वमिति न तत्रापि केवलघटेनैतद्देशवृत्तित्वाश्रयत्वान्वयोपपत्तिर्येन 'अत्र घटौ स्तः' इतिवाक्यस्य प्रामाण्यं स्यादित्यर्थः। यत्र चैकमात्रवृत्ति आकाशत्वादिकं तथा=द्वित्वान्वयितावच्छेदकतया भासते तत्रैकेनाप्याकाशादिना पदार्थान्तरस्य एतद्देशवृत्तित्वाश्रयत्वस्यान्वयः स्वीक्रियते यथा 'अत्राकाशौ स्तः' इत्यत्र, तथा चात्रैकेनैवाकाशेन पदार्थान्तरान्वयस्वीकारादेकाकाशबोधकस्य 'अत्राकाशः' इतिवाक्यस्यैव प्रामाण्यं स्यात् न तु 'अत्राकाशौ' इत्यस्यापीत्याऽऽह— यत्रैकेति। व्युत्पत्तिभेदावलम्बनात्= उक्तनियमस्वीकारात्। कार्यकारणभाववैचित्र्यादिति—अत्र "द्वित्वविशिष्टघटद्वयविशेष्यकैतद्देशवृत्तित्वादिरूपेतरपदार्थान्वयबुद्धित्वावच्छिन्नं प्रति अत्रेत्यादिसप्तम्यन्तपदसमभिव्याहृतद्विवचनान्तघटपदज्ञानत्वेन कारणता, एवमाकाशावत्रेत्यत्र अत्रेतिसमभिव्याहृतद्विवचनान्ताकाशपदज्ञानत्वेन कारणता इति कार्यकारणभाववैचित्र्यात् सर्वं समञ्जसम्— एकघटसत्त्वे 'अत्र घटौ' इत्यापत्तिर्न, 'अत्राकाशौ' इतिप्रयोगोपि, सर्वं समञ्जसं सर्वकार्यनिर्वाहः, वदन्तीत्यनेन 'अत्राकाशौ स्तः' इति प्रयोगो न भवति तन्निर्वाहाय व्युत्पत्त्यङ्गीकारकार्यकारणभावकल्पनमसमञ्जसमेवेत्यस्वरसः सूचितः" इति कृष्णंभट्टाः।

ननु 'घटावानयति चैत्रः' इत्यत्र यदेकस्यामानयनकर्मतायां घटद्वयस्यान्वय उक्तस्तन्न संभवति यतः— आनयनकर्मत्वं ह्येतद्देशसंयोगाश्रयत्वमेव तत्र संयोगस्य स्वाश्रयीभूतव्यक्तिभेदेन भिन्नत्वात् ( नानात्वात् ) संयोगाश्रयत्वमपि घटादिव्यक्तिभेदेन भिन्नमेवेति प्राप्तं तथा च चैत्रकर्तृकघटद्वयानयनदशायामपि तद्घटवृत्त्यानयनकर्मत्वे तस्यैवैकस्य घटस्यान्वयः संभवति न घटद्वयस्यापि— घटद्वये एकाया आनयनकर्मताया अभावात्— आश्रयीभूतव्यक्तिभेदेनानयनकर्मताया भिन्नत्वादिति प्रतिसंदधानस्य=ज्ञानवतः पुंसः 'घटावानयति' इतिवाक्यात् शाब्दबोधानुपपत्तिः= घटद्वयप्रकारकैककर्मताविशेष्यकशाब्दबोधस्यानुपपत्तिरित्याशङ्कते— अथेति, उक्त-

**संसर्गावच्छिन्नप्रतियोगिताकस्य : द्वित्वाद्यवच्छिन्नघटाद्यभावस्य निश्चयसंभवात्, तस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वादिति चेत्?, न–उभयत्वाद्यवच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेव प्रतिबध्नाति न तु केवलं विशेष्ये विशेषणमितिरीत्या जायमानमुभयत्वादिविशि-**

मुपपादयति– तस्येति । तस्य=उक्तपुरुषस्य कर्मतात्वावच्छेदेन=कर्मतात्वावच्छिन्नकर्मतायां आधेयतासंसर्गावच्छिन्नप्रतियोगिताकस्य=आधेयतासंबन्धावच्छिन्ना प्रतियोगिता यस्यैवंभूतस्य द्वित्वाद्यवच्छिन्नघटाद्यभावस्य निश्चयसंभवात् अर्थात् पूर्वोक्ताधेयतासंबन्धेन घटद्वयाभावस्य ( विषयत्वं षष्ठ्यर्थः) निश्चयसंभवात्=निश्चयसत्त्वात् तस्य=उक्तनिश्चयस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वात्=उक्ताधेयतासंसर्गेण द्वित्वविशिष्टघटप्रकारककर्मताविशेष्यकधीविरोधित्वात् ( आधेयतासंबन्धेन द्वित्वविशिष्टघटद्वयस्यैककर्मतायामन्वयज्ञानविरोधित्वात् ) इत्यन्वयः । यदि घटद्वये आनयनकर्मत्वमेकमेव स्यात्तदा घटद्वयस्यैकानयनकर्मत्वेऽन्वयः स्यादपि न चैवमस्ति घटव्यक्तिभेदेनानयनकर्मत्वस्य भिन्नत्वात् तथा चोक्ताधेयतासंसर्गेण कर्मतायां घटद्वयस्याभावनिश्चये जाते तादृशनिश्चयस्याधेयतासंबन्धेन कर्मतायां घटद्वयान्वयज्ञानविरोधित्वात् तादृशनिश्चयवतः पुरुषस्य 'घटावानयति' इतिवाक्याद् द्वित्वविशिष्टघटप्रकारकैककर्मताविशेष्यकशाब्दबोधो न संभवतीतिभावः ।

परिहरति– नेति । उभयत्वावच्छिन्नाभाववत्ताज्ञानम्=उक्तस्वरूपमाधेयतासंबन्धेनैककर्मतायां घटद्वयान्वयो न संभवतीत्याकारकं निश्चयात्मकं ज्ञानम् उभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेव=घटद्वयनिरूपिता यैकानयनकर्मतानिष्ठा एकाधेयता तादृशाधेयतासंबन्धेनानयनकर्मतायां घटद्वयान्वयज्ञानमेव प्रतिबध्नाति प्रथमे निश्चयात्मके प्रतिबन्धकज्ञाने आनयनकर्मतानिष्ठाधेयतायां घटद्वयनिरूपितत्वाभावस्य विषयत्वेन द्वितीये प्रतिबध्यज्ञाने आनयनकर्मतानिष्ठाधेयतायां घटद्वयनिरूपितत्वस्य च विषयत्वेन परस्परं विरोधात्,– उक्तोभयत्वावच्छिन्नाभाववत्ताज्ञानमपि केवलं विशेष्ये विशेषणमितिरीत्या जायमानमुभयत्वविशिष्टज्ञानं तु न प्रतिबध्नाति परस्परं विरोधाभावात् ।

अयं भावः–प्रतिबन्धके आधेयतासंबन्धेनाऽऽनयनकर्मतायामुभयत्वावच्छिन्नघटद्वयाभावविषयकज्ञाने उभयत्वं न केवलं घटविशेषणमात्रं किं त्वानयनकर्मतानिष्ठाधेयताया निरूपिका या घटद्वयनिष्ठाऽऽधारता तादृशाधारतावच्छेदकमप्यस्तीति एतादृशज्ञानेन यस्मिन् ज्ञाने उभयत्वं संबन्धभूताधेयतानिरूपकाधारताया अवच्छेदकं स्यात् तादृशज्ञानस्यैव प्रतिबन्धः संभवति, तथा च उभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहि ज्ञानं हि 'उभयत्वावच्छिन्नघटद्वयनिष्ठाधारतानिरूपिता याऽऽनयनकर्मतानिष्ठाऽऽधेयता तादृशाधेयतासंबन्धेन घटद्वयवती आनयनकर्मता' इति ज्ञानमेव अत्र च ज्ञाने उभयत्वं संबन्धभूताधेयतानिरूपकाधारताया अवच्छेदकत्वेन भासते इत्युक्तोभयत्वावच्छिन्नाभाववत्ताज्ञानं ह्येतद् उभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेव

**ष्टज्ञानम्, अतो विशेषदर्शिनां तादृशवाक्याद् दोषायत्तमाधेयत्वांशे उभयत्वाद्यवच्छिन्ननिरूपितत्वावगाहिभ्रमात्मकज्ञानं न भवत्येव अपि तु तदंशे तदनवगाहि प्रमात्मकं ज्ञानमिति । उभयत्वावच्छिन्ननिरूपिताधेयत्वं चोभयादिवृत्तावेकस्मिन् धर्मे एव न तु प्रत्येकमात्रवृत्ताविति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञानस्य भ्रमत्वमित्यवधेयम् ।**

---

प्रतिबध्नाति. न तु यस्मिन् ज्ञाने उभयत्वं केवलं विशेष्ये घटद्वये विशेषणमात्रं स्यात्तादृशज्ञानमपि–' घटावानयति चैत्रः ' इतिवाक्यजन्यशाब्दज्ञाने चोभयत्वं घटद्वयस्य विशेषणमात्रमेव न तु संबन्धभूताधेयतानिरूपकाधारताया अवच्छेदकत्वेनापि भासते ( येन प्रतिबध्यत्वं स्यात् ) 'घटावानयति' इतिवाक्येनानयनकर्मता घटद्वयनिष्ठा एकैवेति प्रतिपादनाभावात्, घटद्वयनिष्ठानयनकर्मताया ऐक्ये आनयनकर्मतानिष्ठाधेयता एका स्यात्तदा तादृशैकाधेयतानिरूपिका घटद्वयनिष्ठा एकैवाधारता स्यादिति तादृशाधारतावच्छेदकमुभयत्वं स्यादपि न चैवमस्ति व्यक्तिभेदेनानयनकर्मतायां भिन्नत्वात्, तस्मादुक्तप्रतिबन्धकज्ञानेन 'घटावानयति' इतिवाक्याज्जायमानस्योभयत्व-( द्वित्व ) विशिष्टघटप्रकारकानयनकर्मताविशेष्यकज्ञानस्य प्रतिबन्धो न भवतीत्यर्थः । स्वनिष्ठानयनकर्मतायामेव प्रत्येकघटस्य प्रकारतया भानस्वीकारात् प्रत्येकघटस्यापि द्वित्वविशिष्टत्वाच्च द्वित्वविशिष्टघटद्वयस्यैकानयनकर्मतायामन्वयास्वीकाराच्च ।

अत इति– यतो व्यक्तिभेदेनानयनकर्मता भिन्नास्त्यऽतस्तादृशानयनकर्मतानिष्ठाधेयतापि भिन्नास्ति न तु घटद्वयनिरूपिता ( घटद्वयनिष्ठाधारतानिरूपिता ) एकैवाधेयतास्तीति विशेषदर्शिनां किं वाऽऽनयनकर्मत्वमुभयत्वावच्छिन्ननिरूपिताधेयत्वाभाववदिति विशेषनिश्चयवतां पुंसां तादृशवाक्यात्=' घटावानयति ' इतिवाक्याद् आधेयत्वांशे दोषायत्तम्=दोषाधीनमुभयत्वावच्छिन्न( घटद्वय ) निरूपितत्वावगाहि भ्रमात्मकं ज्ञानं नैव भवति ( आधेयताया घटद्वयनिरूपितत्वाभावाद् घटद्वयनिरूपितत्वज्ञानं भ्रमात्मकमेव स्यात् ) अपि तु तदंशे=आधेयत्वांशे तदनवगाहि=उभयत्वावच्छिन्न ( घटद्वय ) निरूपितत्वानवगाहि प्रमात्मकमेव ज्ञानं भवतीत्यर्थः । तथा च प्रतिबन्धकत्वेनाभिमतमपि ज्ञानमाऽऽधेयत्वांशे उभयत्वावच्छिन्ननिरूपितत्वाभावावगाह्येव 'घटावानयति' इतिवाक्यजन्यमपि ज्ञानमाऽऽधेयत्वांशे उभयत्वावच्छिन्ननिरूपितत्वानवगाह्येवेति परस्परसाम्येन विरोधाभावात् प्रतिबध्यप्रतिबन्धकभावो नैव संभवतीति यावत् । ननूक्ताधेयतायामुभयत्वावच्छिन्ननिरूपितत्वावगाहिज्ञानस्य कथं भ्रमत्वमित्याशङ्क्याह– उभयत्वावच्छिन्नेति, यः खलु धर्मो घटद्वये एक एव व्यासज्यवृत्त्या वर्तेत तस्मिन् धर्मे याऽऽधेयता सैवोभयत्वावच्छिन्ननिरूपिता भवति यथा द्वित्वनिष्ठाऽऽधेयता द्वित्वं घटद्वये एकमेवेति द्वित्वनिष्ठाऽऽधेयता घटद्वयनिरूपिता=घटद्वयनिष्ठाधारतानिरूपिता भवति न तु प्रत्येकवृत्तिधर्मनिष्ठाऽऽधेयता उभयत्वावच्छिन्ननिरूपिता भवति किं तु प्रत्येकमात्रनिरूपितैव भवति यथा ' नीलौ घटौ ' इत्यत्र नीलत्वगुणस्य घटव्यक्तिभेदेन भिन्नत्वेन प्रत्येकवृत्तित्वाद् नीलत्वनिष्ठाधेयता न घटद्वयनिरूपिता

**संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित् प्रतीयन्ते यथा 'संपन्नौ व्रीहियवौ' इत्यादौ, एतत्तत्त्वं प्रागेवाभिहितम् ।**

**विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति यथा–'शतमेकम्' 'द्वे शते' 'त्रीणि शतानि' इत्यत्र**

भवति किं तु प्रत्येकनिरूपितैव तथा 'घटावानयति' इत्यत्रापि घटव्यक्तिभेदेनानयनकर्मत्वस्य भिन्नत्वाद् आनयनकर्मत्वनिष्ठाधेयतापि प्रत्येकनिरूपिता भिन्नैव न तूभयत्वावच्छिन्न ( घटद्वय ) निरूपिता भवतीत्यानयनकर्मत्वे तादृशाधेयतावगाहिज्ञानस्य=उभयत्वावच्छिन्ननिरूपिताधेयता वर्तते इत्यवगाहिज्ञानस्य भ्रमत्वमेवेत्यर्थः ।

'अत्र घटौ स्तः' 'घटावानयति' इत्यादौ प्रकृत्यर्थघटादिगतैव संख्या प्रतीयते, क्वचिच्च प्रकृत्यर्थे संख्यान्वयबाधे सति प्रकृत्यर्थतावच्छेदकगतैवसंख्या प्रतीयते यथा 'संपन्नौ व्रीहियवौ' इत्यत्र संपन्नानेकव्रीहियवेषु द्विवचनार्थद्वित्वसंख्यान्वयस्य बाधात् प्रकृत्यर्थतावच्छेदकीभूतयोर्व्रीहित्वयवत्वयोरन्वयो भवति– व्रीहित्वयवत्वजातिमन्तौ संपन्नावित्यर्थ इत्याशयेनाह– संख्याश्चेति । एतत्तत्त्वं=प्रकृत्यर्थतावच्छेदके संख्यान्वयतत्त्वं प्रागेव 'संपन्नो व्रीहिः' ( पृ.७ ) इत्यत्र प्रदर्शितम् । तथा चात्रापि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन द्वित्वस्य प्रकृत्यर्थभूतव्रीहियवयोरप्यन्वयः संभवतीत्यादिकं तत्रैव द्रष्टव्यम् ।

क्वचिच्च प्रकृत्यर्थतावच्छेदकसंख्यायामेव विभक्त्यर्थसंख्या अन्वेतीत्याह– विरुद्धेति, शतादिपदोत्तरविभक्त्युपस्थाप्या या संख्या तद्विरुद्धसंख्यावच्छिन्नवाचकं यच्छतादिपदं तदुत्तरवर्तमानविभक्त्युपस्थाप्येत्यन्वयः । यथा– 'शतमेकम्' इत्यत्र शतपदं शतत्वसंख्यावच्छिन्नवाचकं शतपदोत्तरप्राप्तप्रथमैकवचनं चैकत्ववाचकम्, एकत्वसंख्यायाः शतत्वसंख्यायाश्च परस्परं विरोधाच्छतत्वसंख्यावच्छिन्ने एकत्वसंख्याऽन्वयासंभवात् प्रकृत्यर्थतावच्छेदकीभूतशतत्वसंख्यायां विभक्त्यर्थैकत्वस्यान्वयो भवति– अत्र शतत्वस्यैकत्वात् 'एकत्वविशिष्टं शतत्वम्' इत्यर्थः । 'एकम्' इतिपदं चोक्तैकत्वस्यानुवादकं बोध्यम्, एकत्वस्य स्पष्टप्रतिपत्त्यर्थं चैकपदप्रयोगः। यत्र शतत्वव्यक्ती द्वे भवतस्तत्र द्विवचनं भवति यथा– 'द्वे शते' इति 'द्वित्वविशिष्टं शतत्वम्' इत्यर्थः । एवम् 'त्रीणि शतानि' इत्यादि। यद्यप्यत्र शतत्वसंख्यापि बहुत्वरूपा बहुवचनार्थभूतापि बहुत्वसंख्येति तयोर्बहुत्वत्वेन रूपेण विरोधो नास्ति तथापि त्रिशब्दसामानाधिकरण्यादत्र शतशब्दोत्तरबहुवचनं त्रित्वसंख्योपस्थापकमेव त्रित्वसंख्यायाः शतत्वसंख्यायाश्च परस्परं विरोधाच्छतत्वसंख्यावच्छिने त्रित्वसंख्यान्वयासंभवात् प्रकृत्यर्थतावच्छेदकशतत्वे एव शतशब्दोत्तरबहुवचनार्थत्रित्वसंख्याया अन्वयः– त्रित्वविशिष्टं शतत्वमिति । 'त्रिशतं गावः' इत्यादौ तु 'एकत्वविशिष्टशतत्वत्रिकावच्छिन्ना गावः' इतिवाक्यार्थः । शतादिशब्दानां शक्तिस्तु शतत्वादिसंख्यावच्छिन्ने संख्येये एव । न च शतत्वादिसंख्यायामेकत्वद्वित्वादिसंख्यान्वयासंभवः– गुणे गुणानङ्गीकारादिति वाच्यम्, अत्रैकत्वद्वित्वादीनामपेक्षाबुद्धिविषयत्वरूपत्वेन शतत्वादिसंख्यायामन्वये विरोधा-

शतत्वादावेकत्वद्वित्वबहुत्वानामन्वयः । अत एव चैकशतद्विशततात्पर्येण न 'शतानि' इति प्रयोगः- तत्र प्रकृत्यर्थस्य शतस्य बहुत्वाद्यन्वययोग्यत्वेपि प्रकृत्यर्थतावच्छेदकशतत्वांशे बहुत्वाद्यन्वये एव बहुवचनस्य साकाङ्क्षत्वात् तत्र च योग्यताविरहात् ।

न चैकशतेपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसंभवादेकशतनिष्ठशतत्वेपि बहुत्वान्वययोग्यताऽक्षतैवेति वाच्यम्, परस्परसमानाधिकरणद्वयाऽवृत्तिबहुत्वस्यैव शतादिपदोत्तरबहुवचनार्थत्वात् तादृशबहुत्वस्य चैकशतादिवृत्तिनानाशतत्वादौ

---

भावात् । एकादिपदं चानुवादकमपि सन्न व्यर्थम्—"संभेदे नान्यतरवैयर्थ्यम्" इति न्यायादिति विभावनीयम् ।

अत एव=विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या च संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेतीति नियमस्वीकारादेव । तत्र=एकशततात्पर्येण द्विशततात्पर्येण वा कृते 'शतानि' इति प्रयोगे । तत्र=शतत्वे । एकशततात्पर्येण वा द्विशततात्पर्येण वा 'शतानि' इतिप्रयोगकाले प्रकृत्यर्थे शतत्वसंख्याविशिष्टे बहुत्वमस्तीति बहुवचनार्थबहुत्वान्वययोग्यताप्यस्ति यद्यपि तथापि तत्रान्वयस्वीकारो नास्ति यत्र च प्रकृत्यर्थतावच्छेदकीभूतशतत्वे शतपदोत्तरबहुवचनार्थबहुत्वस्यान्वय इष्टस्तत्र शतत्वे तदानीं बहुत्वाऽभावाद बहुत्वान्वययोग्यता नास्ति—एकशतविषयकतात्पर्ये सति शतत्वव्यक्तेरेकत्वविशिष्टत्वाद् द्विशतविषयकतात्पर्ये च सति द्वित्वविशिष्टत्वादित्यर्थः । एकशतद्विशततात्पर्येण 'शतानि' इतिप्रयोगो न भवतीतिविनिगमनायाः सत्त्वादेव विरुद्धसंख्यावच्छिन्नवाचकेत्याद्युक्तनियमः स्वीक्रियते अन्यथा बहुवचनार्थबहुत्वस्य शतत्वसंख्यावच्छिन्नप्रकृत्यर्थेऽन्वयसंभवे एकशतद्विशततात्पर्येणापि 'शतानि' इतिप्रयोगः स्याद् न चैतदिष्टम् ।

ननु शतत्वादिसंख्या ह्यपेक्षाबुद्धिजन्यैव भवति अपेक्षाबुद्धिश्च पुरुषभेदेन भिन्नेत्येकस्मिन्नपि शते देवदत्तयज्ञदत्तादिनानापुरुषीयापेक्षाबुद्धिभिर्नानाशतत्वोत्पत्त्या एकशतद्विशततात्पर्यकालेप्येकशतादौ नानाशतत्वसंभवात् तादृशनानाशतत्वेषु बहुत्वसत्त्वेन बहुवचनार्थबहुत्वान्वययोग्यतायाः संभवाद् एकशतद्विशततात्पर्यकालेपि 'शतानि' इति प्रयोगः कथं न स्यादित्याशङ्कते— न चेति । परिहारमाह—परस्परेति, नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वानि परस्परं समानाधिकरणान्येव भवन्ति— एकस्मिन्नेव शते वर्तमानत्वात्, शतादिपदोत्तरबहुवचनार्थभूतबहुत्वं च परस्परसमानाधिकरणद्वयाऽवृत्तिबहुत्वमेव भवति यथा बहुशततात्पर्ये सति 'शतानि' इत्यत्र शतत्रये पृथक् पृथक शते शतत्वं वर्तते इत्येतादृशशतत्वानि परस्परं व्यधिकरणान्येवेति तत्र शतत्रयगतशतत्वत्रये यद् बहुत्वं तत् परस्परसमानाधिकरणम्= एतत्तृतीयशतत्वसमानाधिकरणं यच्छतत्वद्वयं तद्वृत्तिर्न भवति तादृशबहुत्वस्य परस्पराऽसमानाधिकरणशतत्वेषु वर्तमानत्वाद् एतादृशं परस्पराऽसमानाधिकरणशतत्वेषु वर्तमानमेव बहुत्वं च शतपदोत्तरबहुवचनार्थ इति तस्य बहुशततात्पर्ये सत्येव शतत्वेष्वन्वयः संभवति न त्वेकशतद्विशततात्पर्ये सत्यपि— तादृशबहुत्वस्य=

बाधात् । अथ वा तत्रापि बहुत्वमेव बहुवचनार्थः, परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिरेवाकाङ्क्षानिरूपकः संबन्धः ।

यत्तु 'द्वे शते' 'त्रीणि शतानि' इत्यादौ संख्यैव शतादिशब्दार्थौ न तु संख्येयम्, संख्येयस्य तदर्थत्वे "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः" इत्य-

परस्पराऽसमानाधिकरणशतत्वेषु वर्तमानस्य बहुवचनार्थभूतबहुत्वस्य एकशतवृत्त्यपेक्षाबुद्धिजन्योक्तनानाशतत्वेषु बाधात्, तस्मादेकशतद्विशततात्पर्येण 'शतानि' इति प्रयोगापत्तिर्नास्त्येवेत्यर्थः । एकस्मिन्नेव शते यदा नानापुरुषीयापेक्षाबुद्धिभिर्नानाशतत्वान्युत्पद्यन्ते तत्र तादृशनानाशतत्वेषु वर्तमानं बहुत्वं परस्परसमानाधिकरणम्=बहुत्वाश्रयीभूततृतीयशतत्वसमानाधिकरणं यच्छतत्वद्वयं तद्वृत्त्येव भवति तत्र बहुत्वाश्रयीभूतसकलशतत्वानामेकस्मिन्नेव शते वर्तमानत्वेन समानाधिकरणत्वात्, न चैतादृशं परस्परसमानाधिकरणनानाशतत्वेषु वर्तमानं बहुत्वं बहुवचनार्थो भवति येनैकशतगतनानाशतत्वान्याश्रित्यैकशतद्विशततात्पर्येणापि 'शतानि' इति प्रयोगः स्यादित्यर्थः ।

पक्षान्तरमाह—अथ वेति । यथान्यत्र सर्वत्र बहुत्वमेव बहुवचनार्थस्तथा तत्रापि='शतानि' इत्यत्रापि परस्परसमानाधिकरणद्वयावृत्तित्वविशेषणरहितमेव बहुत्वं बहुवचनार्थ इत्यत्र बहुत्वस्य परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिः संबन्ध इत्युच्यते तथा च बहुशततात्पर्ये सति 'शतानि' इतिप्रयोगो भवति— तत्र बहुत्वाश्रयीभूतशतत्वत्रयस्य पृथक् पृथक् शते वर्तमानत्वेन समानाधिकरणत्वाभावात्. परस्परसमानाधिकरणम्=तृतीयशतत्वसमानाधिकरणं यच्छतत्वद्वयं तदऽवृत्तिर्या बहुत्वपर्याप्तिस्तादृशपर्याप्तिसंबन्धेन बहुवचनार्थबहुत्वस्य शतत्वत्रये वर्तमानत्वात्. बहुत्वपर्याप्तेर्बहुशतत्वेष्वेव संभवादित्यर्थः । एकशतद्विशतविषयकतात्पर्ये च सत्येकशतगतनानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वेषु बहुत्वस्य परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिसंबन्धेन वृत्तित्वं न संभवति यतः— एकशतगतनानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वानामेकशतगतत्वेन समानाधिकरणत्वात् तेषु वर्तमानस्य बहुत्वस्य बहुत्वाश्रयीभूततृतीयशतत्वसमानाधिकरणशतत्वद्वयेपि पर्याप्तिरस्त्येवेति तत्र बहुत्वं परस्परसमानाधिकरणद्वय ( शतत्वद्वय ) वृत्तिपर्याप्तिसंबन्धेनैव वर्तते न चैतादृशपर्याप्तिसंबन्धेन बहुत्वमिष्टमिति नैकशतद्विशतविषयकतात्पर्येण 'शतानि' इति प्रयोगापत्तिः ।

परिहाराय मतान्तरमनुवदति— यत्त्विति, 'शतानि' इत्यत्र शतादिशब्दानां संख्येयवाचकत्वे शतत्वादेः संख्येयपदार्थतावच्छेदकत्वं प्राप्तं तत्र शतत्वादौ शतपदोत्तरबहुवचनाद्यर्थबहुत्वादेरन्वये च "प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्" इतिनियमस्य परित्यागः स्यादेव—प्रकृत्यर्थभूतसंख्येये समन्वयाभावात् संख्येयार्थावच्छेदकीभूते शतत्वादावन्वयात्, तथा शतादिशब्दानां संख्येयवाचकत्वे "विंशत्याद्याः" इत्यनुशासनेनैकवचनान्तत्वं प्रतिपाद्यते 'द्वे शते' 'त्रीणि शतानि' इत्यत्र तु द्विवचनान्तो बहुवचनान्तश्च प्रयोगोस्तीत्युक्तानुशासनविरोधोपि संख्ये-

नुशासनविरोधाद् द्विवचनादिसाधुतानुपपत्तेः 'गवां शतानि' इत्यादौ षष्ठ्यर्थान्वयानुपपत्तेश्च। न चाभेदः षष्ठ्यर्थः- तथा सति 'ब्राह्मणा दश' इत्यत्र 'ब्राह्मणानां दश' इत्यपि स्यात् । अस्माकं चादशतः संख्याः संख्येये वर्तन्ते. अतः परं संख्याने संख्येये च इत्यनुशासनाद् दशादिशब्दानां शतादिशब्दवत् संख्या-

---

यवाचकत्वेऽत्र प्राप्तः, उक्तानुशासनविरोधादेव शतादिशब्दस्य संख्येयवाचकत्वे 'द्वे शते' 'त्रीणि शतानि' इत्यादौ द्विवचनादेः साधुत्वानुपपत्तिरपि प्राप्ता, तथा शतादिशब्दानां संख्येयवाचकत्वे 'गवां शतानि' इत्यादौ गोपदोत्तरषष्ठ्यर्थस्यान्वयानुपपत्तिरप्यस्ति- षष्ठ्यर्थस्य भेदसंबन्धस्य कचिदप्यन्वयो न संभवति- यथा 'घटस्य नीलः' इत्यत्र 'घटवृत्तिर्नीलः' इति बोधो जायते तथात्र 'गोवृत्तीनि शतसंख्येयानि' इत्यपि बोधो नोपपद्यते तस्मात् शतादिशब्दा न संख्येयवाचकाः किं तु संख्यावाचका एवेति स्त्रीकार्यम्, संख्यावाचकत्वे तु शतादिपदोत्तरबहुवचनाद्यर्थबहुत्वादेः प्रकृत्यर्थशतादिसंख्यायामेवान्वयात् "प्रत्ययानां प्रकृत्यर्थान्वितस्त्रार्थबोधकत्वम्" इति नियमरक्षापि भवति, तथा संख्यावाचकत्वे "संख्यायां द्विबहुत्वे स्तः" इत्यनेन द्विवचनान्तत्वबहुवचनान्तत्वयोरपि बोधनात् 'द्वे शते' 'त्रीणि शतानि' इत्यत्रानुशासनविरोधोपि नास्तीति द्विवचनादिसाधुतानुपपत्तिरपि नास्ति, 'गवां शतानि' इत्यत्र षष्ठ्यर्थान्वयानुपपत्तिरपि नास्ति 'घटस्य नीलः' इत्यत्र 'घटवृत्तिर्नीलः' इतिबोधवदत्रापि 'गोवृत्तीनि बहूनि शतत्वानि' इतिबोध उपपद्यते संख्यायाः संख्येयपदार्थवृत्तित्वे विरोधाभावादित्यर्थः। ननु 'गवां शतानि' इत्यत्राभेद एव षष्ठ्यर्थस्तथा च शतशब्दस्य संख्येयपरत्वे 'गवाभिन्नानि शतसंख्येयानि' इतिवाक्यार्थबोधो भविष्यतीत्याशङ्क्याह- न चेति। परिहारमाह- तथा सतीति, यद्यभेदोपि षष्ठ्यर्थः स्यात्तदा 'ब्राह्मणा दश' (दशसंख्याका ब्राह्मणाः) इत्यस्य स्थाने 'ब्राह्मणानां दश' इत्यपि प्रयोगः स्यात्-अभेदबोधसंभवात्, न च 'ब्राह्मणानां दश' इतिप्रयोगो भवतीति नाऽभेदः षष्ठ्यर्थस्तथा च शतादिशब्दानां संख्येयवाचकत्वे 'गवां शतानि' इत्यादौ षष्ठ्यर्थान्वयानुपपत्तिस्तदवस्थेति संख्यैव शतादिशब्दार्थ इत्यर्थः।

स्वमतमाह- अस्माकं चेति, "संख्येये ह्यादश त्रिषु" इत्यनुशासनाद् आदशतः=एकमारभ्याष्टादशपर्यन्ताः संख्यावाचकाः शब्दाः संख्येयवाचका एव यथा 'एकः पटो द्वौ पटौ दश ब्राह्मणा अष्टादश गावः' इति तथा च दशशब्दस्य संख्येयपरत्वेनाऽभेदबोधनार्थम् 'ब्राह्मणा दश' इत्येव प्रयोगो भवति न तु 'ब्राह्मणानां दश' इत्यपि-अभेदबोधासंभवात्। अतः परम्=अष्टादशसंख्यातः परं एकोनविंशत्यादिसंख्यावाचकाः शब्दाः संख्यावाचकाः संख्येयवाचकाश्च भवंति तत्र संख्येयवाचका यथा- 'एकोनविंशतिः पटाः' 'शतं गावः' इत्यादि, संख्यावाचका यथा 'पटानामेकोनविंशतिः' 'गवां शतम्' इत्यादि, तथा च शतादिशब्दवत=यथा शतादिशब्दानाम् "विंशत्याद्याः" इत्यनुशासनेन संख्यानार्थकत्वम्=संख्यावाचकत्वमस्ति तथा दशादिशब्दानाम्=एकमारभ्याष्टादशपर्यन्तसंख्यावाचकानां दशादिशब्दानाम्

नार्थकत्वाभावात् । दशत्वादिसंख्यायाः पदार्थतावच्छेदकत्वेन तत्र षष्ठ्यर्थसंबन्धान्वयासंभवेन न तथाप्रयोग इति ।

तदसत्–'गवां शतानि' इत्यादौ संख्यायाः प्राधान्येन शतादिशब्दवाच्यत्वे 'गवां शतं दद्यात्' इत्यादौ शतादिपदार्थस्य संख्याया दानादिकर्मत्वान्वयाऽयोग्यतया प्रामाण्यानुपपत्तिः, 'गवां शतं शुक्लम्' इत्यादौ संख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात् तदनुपपत्तिश्च, तस्माद् दशादिशब्दा इव विंशतिशतसहस्रादिशब्दा अपि संख्यावच्छिन्नवाचका एव न तु धर्मिविशेषणतानापन्नसंख्यावाचकाः ।

---

"संख्येये ह्यादश त्रिषु" इत्यनुशासनात्संख्येयमात्रवाचकत्वेन संख्यानार्थकत्वाभावात्=संख्यावाचकत्वमेव नास्ति येन 'ब्राह्मणानां विंशतिः' इतिवत् 'ब्राह्मणानां दश' इत्यपि प्रयोगः स्यात् । दशादिशब्दानां संख्यावाचकत्वे "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तेर्विरोधमप्याह– दशत्वादीति, दशादिशब्दानां संख्यावाचकत्वे संख्यायाश्च पदार्थतावच्छेदकत्वेन पदार्थत्वाभावात् तत्र षष्ठ्यर्थस्य वृत्तित्वस्य दशत्वसंख्यायामन्वयो न संभवतीतिहेतोरपि तथा=' ब्राह्मणानां दश' इति प्रयोगो न भवति. ब्राह्मणानां विंशतिः' इत्यादौ तु "विंशत्याद्याः" इत्यनुशासनबलाद् विवशम् "पदार्थः पदार्थेनान्वेति" इतिव्युत्पत्तेः संकोचं कृत्वा पदार्थतावच्छेदकीभूतविंशतित्वादिसंख्यायां षष्ठ्यर्थान्वयः स्वीक्रियते यथा– 'ब्राह्मणवृत्ति विंशतित्वम्' इति, एवमेव 'गवां शतानि' इत्यस्यापि 'गोवृत्तीनि शतत्वानि' इत्येवार्थस्तथा च सिद्धम्– 'द्वे शते' 'त्रीणि शतानि' इत्यादौ संख्यैव शतादिशब्दार्थ इत्यर्थः ।

परिहरति– तदसदिति, यदुक्तम् 'द्वे शते' 'त्रीणि शतानि' इत्यादौ संख्यैव शतादिशब्दार्थो न तु संख्येयमिति तन्न युक्तं एवं हि 'गवां शतानि' इत्यत्रापि शतशब्दवाच्या प्राधान्येन संख्यैव स्यात् तथा च 'गवां शतं दद्यात्' इत्यत्रापि शतशब्दवाच्या संख्यैव स्यात् संख्यायाश्च दानकर्मत्वं न संभवतीति शतसंख्याया दानकर्मत्वेऽन्वययोग्यताया असंभवाद् असंभावितार्थबोधकत्वात् 'गवां शतं दद्यात्' इत्यस्याप्रामाण्यं स्यात्, एवम् 'गवां शतं शुक्लम्' इत्यत्रापि शतशब्दवाच्या संख्यैव स्यात् संख्यायाश्च शुक्लगुणवत्त्वं शुक्लत्वगुणेनाभेदो वा न संभवतीति 'गवां शतं शुक्लम्' इति वाक्यस्यापि तदनुपपत्तिः=प्रामाण्यानुपपत्तिः, तस्माद् यथा दशादिशब्दाः संख्यावच्छिन्नसंख्येयवाचकास्तथा: शतादिशब्दा अपि संख्यावच्छिन्नसंख्येयवाचका एव न तु प्राधान्येन संख्यावाचकास्तथा च 'गवां शतं दद्यात्' इत्यत्र शतशब्दस्य संख्येयवाचकत्वे प्राप्ते संख्येयस्य च दानकर्मत्वयोग्यत्वान्न प्रामाण्यानुपपत्तिः, तथा 'गवां शतं शुक्लम्' इत्यत्रापि शतशब्दस्य संख्येयवाचकत्वे प्राप्ते संख्येयस्य च शुक्लत्वगुणेनाऽन्वययोग्यत्वेन शुक्लपदार्थेनाभेदान्वययोग्यत्वान्न प्रामाण्यानुपपत्तिरित्यर्थः । धर्मिविशेषणतानापन्नेति– यथा घटादिशब्दानां घटाद्यवच्छेदकीभूतघटत्वादिवाचकत्वमपि भवति– घटादिवाचकत्वाद

स्वार्थैकदेशेपि संख्यायां स्वप्रकृतिकविभक्त्यर्थसंख्यान्वयसाकाङ्क्षतयाऽन्य-प्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षतया च तेषां संख्यानार्थकताप्रवादो न तु दशादिशब्दानां तथात्वं दशादिब्राह्मणतात्पर्येण 'ब्राह्मणानां दश' इत्यादि-प्रयोगविरहादिति तेषां संख्येयमात्रवाचिताप्रवाद इति, "विंशत्याद्याः सदैकत्वे

---

घटादिपदार्थानां घटत्वादिविशिष्टत्वात् तथा विंशत्यादिसंख्याशब्दानामपि संख्याविशिष्टसंख्ये-यवाचकत्वमेवेति संख्येयरूपधर्मिविशेषणतापन्नसंख्यावाचकत्वमपि प्राप्तमेवेत्येव युक्तं न तु धर्मिविशेषणताऽनापन्नसंख्यावाचकत्वम्=केवलं संख्यामात्रवाचकत्वमित्यर्थः ।

ननु यदि 'गवां शतानि' 'गवां शतं दद्यात्'इत्यादौ शतादिशब्दानां संख्येयवाचकत्वमेव न च संख्यावाचकत्वं तदा सर्वत्र संख्येयवाचकत्वमेव स्यात्तथा च शतादिशब्दानां संख्यावा-चकत्वं कथमुच्यते जनैः तथा दशादिशब्दानां केवलं संख्येयमात्रवाचकत्वं न संख्यावाचकत्व-मित्यपि कथमुच्यते? इत्याशङ्क्य शतादिशब्दानां संख्यावाचकत्वप्रवादमुपपादयति— स्वार्थैकेति। दशादिशब्दानां संख्येयमात्रवाचकत्वप्रवादं चोपपादयति—दशादिब्राह्मणेति । 'एकं शतम्' इत्यत्र स्वार्थैकदेशे=स्वार्थैकदेशभूतायां संख्यायाम्=शतत्वसंख्यायां स्वप्रकृतिकविभक्त्यर्थसंख्या-न्वयसाकाङ्क्षतया= स्वं शतशब्दस्तत्प्रकृतिकविभक्तिः शतपदोत्तरप्रथमाविभक्तिस्तदर्थभूतैकत्व-संख्याया अन्वये साकाङ्क्षतया ( एकं शतत्वमितिबोधात् ) तेषाम्=शतादिशब्दानां संख्या-नार्थकताप्रवादः=संख्यावाचकत्वप्रवादोस्ति—शतादिपदोत्तरविभक्त्यर्थभूतसंख्यायाः शतत्वादिसं-ख्यायामन्वयस्वीकारादित्यर्थ एतच्च पूर्वमेव 'विरुद्धसंख्यावच्छिन्नवाचक' ( पृ. १७१ ) इत्यादि-नोक्तम्, तथा स्वार्थैकदेशसंख्यायां शतत्वादौ अन्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षतया= 'गवां शतम्' इत्यत्रान्यप्रकृतिका= गोपदप्रकृतिका या गवामिति गोपदोत्तरषष्ठी तदर्थो यो वृत्तित्वसंबन्धस्तस्यान्वये साकाङ्क्षतया च तेषां शतादिशब्दानां संख्यानार्थकताप्रवा-दोस्ति— 'गवां शतम्' इत्यत्र गोवृत्तिशतत्वम्=गोवृत्तित्वाश्रयतावच्छतत्वमितिबोधोदयात् षष्ठ्यर्थवृत्तित्वस्य शतत्वादावन्वयस्वीकारात् संख्यावाचकत्वप्रवाद एव, संख्येयवाचकत्वं तु युक्तमेव 'गवां शतं दद्यात्' इत्यादिप्रयोगात् । दशादिशब्दानां च तथात्वम्=स्वप्रकृतिकवि-भक्त्यर्थसंख्यान्वयसाकाङ्क्षत्वं तथाऽन्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षत्वं च नास्ती-ति दशपदोत्तरविभक्त्यर्थसंख्यायास्तथा ब्राह्मणपदाद्युत्तरषष्ठ्यर्थवृत्तित्वस्य दशत्वसंख्यायामन्वया-संभवान्न दशादिशब्दानां संख्यानार्थकताप्रवाद इत्यर्थः । दशादिशब्दानां संख्येयमात्रवाचिता-प्रवादकारणमाह— दशादिब्राह्मणेति, यदि दशादिशब्दानामपि संख्यावाचकत्वं स्यात्तदा 'ब्राह्मणानां शतम्' इतिवत् 'ब्राह्मणानां दश' इत्यपि प्रयोगः स्याद् न चैवं प्रयोगो भवतीति न दशादिशब्दानां संख्यावाचकत्वं किं तु 'ब्राह्मणा दश' इत्येव प्रयोगो भवतीति तेषाम्=दशादिशब्दानां संख्येयमात्रवाचिताप्रवादोस्ति, वस्तुतस्तु सर्वेषामेव दशादिशब्दानां

